श्रीमद्धनुमद्भीममध्वांतर्गतरामकृष्णवेद्व्यासात्मकलक्ष्मीहयग्रीवायनमः॥॥ॐ॥सर्वत्राखिलसच्छक्तिःस्वतं
त्रोशेषदर्शनः।नित्यातादृशचिच्चेत्ययंतेष्टोनोरमापतिः॥विमतोभिन्नोमुक्तत्वाद्यदित्थंतत्तथायथासंप्रतिपन्नः।
नचभेदेविकल्पोयुज्यते। अनिर्वचनीयस्यसर्वत्राप्रसिद्धत्वादेव। शशविषाणंगोविषाणंवोच्यतइतिवत्। नचा
निर्वचनीयेकिंचिन्मानं।मिथ्याशब्दोऽनिर्वचनीयंवदतीत्यत्रच। अनुमानस्यचाप्रसिद्धविशेषणःपक्षः। नचधू
मत्ववन्मिथ्यात्वमित्युभयसंप्रतिपन्नंसामान्यमस्ति। नचबाष्पारोपितधूमेनधूमवत्त्वंव्यभिचरति।नचभावाभा
वविलक्षणंक्वचिदागमोवक्ति। नासदासीन्नोसदासीत्तदानींनासीद्रजोनोव्योमापरोयदित्यत्रच।पारिशेष्येणा
निर्वचनीयत्वांगीकारेआनीदवातंस्वधयातदेकमितितदानींपरिशिष्टत्वाद्ब्रह्मणएवानिर्वचनीयत्वंस्यात्।मूर्तं
सदितिसंप्रोक्तममूर्तमसदुच्यते। मूर्तामूर्तेतरद्ब्रह्मनसत्तन्नासदुच्यतइतिपैंगिश्रुतिः।यदन्यद्वायोश्चांतरिक्षाच्चै
तत्सदितिमाध्यंदिनश्रुतिः।अद्भुतत्वादनिर्वाच्यंब्रह्मचिच्चेत्यमेवच। अचिंत्यंततएवैतदतर्क्यांज्ञेयमेवच। ऋग
ताविितिधातोस्तुपूर्वावगतवत्सदा।स्थितेर्ब्रह्मर्तमित्युक्तमनृतंपरिणामतः।प्रकृतिप्राकृतंप्रोक्तमसत्तदशुभत्वतः
। असतांबुद्धिगम्यत्वादसत्यमितिचोच्यते। नियमेनबहिश्चित्तास्तेसंतोब्रह्मणिस्थिताः। विश्वंसत्यंवशेविष्णो

नित्यमेवप्रवाहतः । नकाप्यनीदृशंविश्वंतत्तत्कालानुसारतः।असत्यमप्रतिष्ठंयेजगदाहुरनीश्वरं।तआसुराःस्वयंनष्टाजगतःक्षयकारिणइत्यादिव्यासस्मृतौ। असत्यमप्रतिष्ठंतेजगदाहुरनीश्वरं।अपरस्परसंभूतंकिमन्यत्कामहैतुकं। एतांदृष्टिमवष्टभ्यनष्टात्मानोल्पबुद्धयः।प्रभवंत्युग्रकर्माणःक्षयायजगतोऽहिताइत्यादिचगीतासु। विश्वंसत्यंमघवानायुवोरिदापश्चनप्रमिनंतिव्रतंवां। प्रधान्वस्यमहतोमहानिसत्यासत्यस्यकरणानिवोचं। सत्यःसोअस्यमहिमागृणेशवोयज्ञेषुविप्रराज्ये। कविर्मनीषीपरिभूःस्वयंभूर्याथातथ्यतोर्थान्व्यदधाच्छाश्वतीभ्यःसमाभ्यइत्यादिश्रुतिभ्यश्च। नचार्थापत्त्याऽनिर्वचनीयसिद्धिः। असतःप्रतीतिंविनाऽसद्वैलक्षण्यज्ञानानुपपत्तेः। नचबाध्यंजगदित्यत्रकिंचिन्मानं । बाध्यत्वमपिहितेषांमिथ्या । तस्यचमिथ्यात्वेऽबाध्यत्वमेवसत्यंस्यात् । सद्विलक्षणत्वंचसजातिविलक्षणत्वंसन्मात्रविलक्षणत्वंवा। जात्यंगीकारेसद्बहुत्वं। सन्मात्रविलक्षणत्वंचेत्सिद्धसाधनता। ब्रह्मवैलक्षण्यांगीकारात्। नचकयापियुक्त्यामानेनवाभेदनिराकरणंभवति। अंगीक्रियमाणत्वात्। अनिर्वचनीयासिद्धेश्च। सद्विलक्षणत्वमसद्विलक्षणत्वंचमिथ्येत्यविलक्षणत्वमेवसत्यंस्यात्। एवमेवहेत्वादिष्वपिविकल्पोनिराकरणीयः। दृश्यत्वाद्यनुमानेष्वप्येतएवदोषाः। आत्मनोपिदृश्यत्वादनैकांतिकता

च। नचात्मनोदृक्कर्मत्वंविनातज्ज्ञानत्वं। तदज्ञाननिवृत्तिश्चतेनभवति। नचतदाकारं। अतद्विषयत्वादेव। तद्विषयत्वमेवहितदाकारत्वं। नहिज्ञानज्ञेययोरेकाकारता। नह्यज्ञानस्यघटाश्रयत्वंब्रह्माश्रयत्वंवास्ति। पुंगतमेवहितमः। ज्ञानेननिवर्तते। विषयाश्रयंचेदज्ञानंनिवर्ततेतर्ह्येकेनज्ञातस्यघटस्यान्यैरज्ञातत्वंनस्यात्। अतद्विषयज्ञानेनतदज्ञाननिवृत्तौघटज्ञानेनापिनिवर्तेत। अविषयत्वादेवतस्यज्ञानत्वंनस्याद्घटवत्। जडत्वंचाप्रमातृत्वमेव। नचप्रमातृत्वमात्मनस्तैरंगीक्रियते। अतस्तदप्यनैकांतिकं। मिथ्याप्रमातृत्वंचानिर्वचनीयनिरासादेवनिरस्तं। यदिजडत्वंनामाप्रकाशत्वंतदप्यात्मनःस्वविषयप्रकाशत्वाभावात्परविषयप्रकाशत्वाभावाच्चानैकांतिकमेव। स्वविषयत्वंहिकर्तृकर्मविरोधात्तैर्नांगीक्रियते। मिथ्याभूतपरविषयत्वंचानिर्वचनीयनिरासादेवनिरस्तं। विषयवर्जितःप्रकाशएवनभवतिघटवत्। तत्प्रमाणाभावात्। देशतःकालतःपरिच्छिन्नत्वंप्रकृतिकालादिष्वभावाद्भागासिद्धं। वस्तुतःपरिच्छिन्नत्वमात्मनोपिभेदांगीकारादनैकांतिकं। प्रत्यक्षबाधितंचजगन्मिथ्यात्वं। सदितिप्रतीयमानत्वात्। नचप्रत्यक्षसिद्धमन्येनकेनापिबाध्यंदृष्टं। चंद्रप्रादेशत्वादिविषयंतुदूरस्थत्वादिदोषयुक्तत्वादपटु। नचजगत्प्रत्यक्षस्यापटुत्वेकिंचिन्मानं। नचजगतोऽज्ञानजन्यत्वेकिंचिन्मानं। नच

मायाविनामायादृश्यतेविश्वमीश्वरः । सदापश्यतितेनेदंनमायेत्यवधार्यतां। अपरोक्षदृशोमिथ्यादर्शनंनक
चिद्भवेत् । सर्वापरोक्षविद्विष्णुर्विश्वदृक्तन्नतन्मृषेतिब्रह्मांडे । ईशोनीशोजगन्मिथ्यानपूज्योगुरुरित्यपि ।एक
आत्मापरब्रह्मभावोमुक्तिरितिह्यपि । एवमादिविरुद्धानिवचनान्यथयुक्तयः। प्रमाणैर्बहुभिर्ज्ञेयाआभासाइति
वैदिकैः।वेदवेदानुसारेषुविरोधेन्यार्थकल्पना।इतराणिविरुद्धानिप्रलंभभ्रमजान्यपीतिव्यासस्मृतिः। ॐनास
तोदृष्टत्वात्। नाभावउपलब्धेः। वैधर्म्याच्चनस्वप्नादिवदित्यादिभगवद्वचनेनापिनिरस्ताः । नचशून्यवादिनःस
काशाद्वैलक्षण्यंमायावादिनः । व्यावहारिकसत्त्वस्यतेनाप्यंगीक्रियमाणत्वात् । सत्यंतुद्विविधप्रोक्तंसांवृतंपार
मार्थिकं। सांवृतंव्यावहार्यंस्यान्निवृत्तौपारमार्थिकं । विचार्यमाणेनोसत्त्वंसत्त्वंचापिप्रतीयते। यस्यतत्सांवृतंज्ञे
यंव्यवहारपदंचयदित्यादिना । नचनिर्विशेषब्रह्मवादिनःशून्यात्कश्चिद्विशेषस्तस्य । निर्विशेषंस्वयंभातंनिर्लेप
मजरामरं । शून्यंतत्त्वमविज्ञेयंमनोवाचामगोचरं । जाड्यसंवृतिदुःखांतपूर्वदोषविरोधियत् । नित्यभावन
याभातंतद्भावंयोगिनंनयेत्। भावार्थप्रतियोगित्वंभावत्वंवानतत्त्वतः। विश्वाकारंचसंवृत्यायस्यतत्पदमक्षय
मित्यादितद्वचः । अनृतजडविरोधिरूपमंतत्रयमलबंधनदुःखताविरुद्धमितिचमायावादी ।नास्यसत्त्वमस

त्वंवानदोषगुणएववा। हेयोपादेयरहितंतच्छून्यंपदमक्षयमितिचशून्यवादी। सत्त्वादयोधर्माःपरमार्थतोमा
यावादिनापिनांगीक्रियंते। सर्वविशेषविनिर्मुक्तत्वांगीकारात्। अवाच्यंसर्वशब्दैस्तल्लक्ष्यतेचाखिलैःपदैः।
अज्ञेयंज्ञानलक्ष्यंचतच्छून्यंपदमक्षयमितिचशून्यवादी। नचाखंडत्वेनकश्चिद्विशेषः। यदखंडपदंलक्ष्यंसर्वैर
पिविशेषणैः। सर्वैर्विशेषणैर्मुक्तंतच्छून्यंपदमक्षयमितिचशून्यवादी। एवमेवमायावादिराद्धांतः। नचमायावा
दिनोभावत्वंनामधर्मः। नचशून्यवादिनाशून्यत्वंनामधर्मः। मय्यनंतगुणेनंतेगुणतोनंतविग्रहे। यदासीत्तत
एवाद्यःस्वयंभूःसमभूदजः। उत्तमःपुरुषस्त्वन्यःपरमात्मेत्युदाहृतः। योलोकत्रयमाविश्यबिभर्त्यव्ययईश्वरइति
भगवद्राद्धांतः। परास्यशक्तिर्विविधैवश्रूयतेस्वाभाविकीज्ञानबलक्रियाचेत्यादिश्रुतिः। प्रकृष्टप्रकाशश्चंद्रइत्या
दिषुप्रकृष्टत्वादिविशेषणानिसंत्येवेतिनतत्साम्यं। अनित्यदेशकालसंबंधित्वस्यसत्त्वान्नसोयंदेवदत्तइत्याद्युप
माच। देवदत्तादिस्वरूपमात्रस्यसिद्धत्वान्नस्वरूपमात्रेप्रश्नः। नक्षत्रादिव्यतिरेकमात्रस्यापिसिद्धत्वान्नव्यतिरे
कमात्रे। अन्यथाप्रश्नस्यैवासंभवात्। अतःकैर्विशेषणैर्विशिष्टइतिप्रश्नेप्रकृष्टप्रकाशतद्देशकालादिविशिष्टएववा ॥२४३॥
क्यार्थः। अंगीक्रियमाणत्वाद्विशिष्टादेरनिर्वचनीयाभावाच्चसत्यत्वंचसिद्धं। दृष्टस्यवस्तुनोबलवद्दृष्टिंविनानान्य

द्बाधकमितिदुर्घटत्वेसुघटत्वेवानानिर्वचनीयसिद्धिः । सर्ववैलक्षण्यांगीकाराद्दुर्घटमपिब्रह्मप्रमाणादंगीक्रिय
तएवजगतोभिन्नमभिन्नंभिन्नाभिन्नंवेत्यादिविकल्पस्तत्रापियुज्यते । भिन्नंचेद्भेदादिविशिष्टाच्छुद्धंभिन्नमभि
न्नंवेत्याद्यनवस्था । अभिन्नंचेन्मिथ्यारूपेणजगताब्रह्मापिमिथ्यैवस्यात् । भिन्नाभिन्नंचेद्दोषद्वयमपि । उभयवि
लक्षणंचेदनिर्वचनीयत्वंब्रह्मणएवापतितं । यद्येवमपिनानिर्वचनीयत्वंब्रह्मणस्तर्हिजगतोपिनस्यात् । विश्वंस
त्यमित्यादिवचनमत्राप्युक्तं । नसत्तन्नासदुच्यते । असद्वाइदमग्रआसीत् । नासदासीन्नोसदासीदित्यादिब्रह्म
णोपिमिथ्यात्वेप्रमाणमस्ति । नहिदृष्टेबलवत्किंचित्प्रमाणं । नहियुक्तिपराजितोपिक्षुधितोनान्नमत्ति । बलव
द्दृष्ट्यबाधे । नचान्नत्वेदुर्घटेतस्यानन्नत्वंभवति । दृष्ट्यबाधितदृष्टस्य । नचान्नानन्नवैलक्षण्यमनुभूयते । नचत
थाव्यवहारः । नचतत्रकिंचिन्मानं । अतोविशिष्टादिनिराकरणयुक्तीनामपिविशिष्टाद्यपेक्षत्वाज्जात्युत्तरमिति
नयुक्तिबाधापि । अतोनिखिलगुणगणाढ्यमेवब्रह्मश्रुत्यभिप्रेतं । अनिर्वचनीयासिद्धेरेवानुमानस्याप्यसि
द्धिः । यदिजगन्मिथ्यास्यात्तदादृश्यत्वाद्यनुमानस्यापिजगदंतःपातित्वेनमिथ्यात्वादसिद्धिःस्यात् । वाचा
रंभणंविविधप्रकारःनामधेयंनित्यंधार्यंनाममृत्तिकेत्यादिवैदिकमेव । अनित्यत्वात्सांकेतिकंनामाप्रधानंनि

त्यत्वान्मृत्तिकादिनामैवप्रधानं । प्रधानज्ञानादप्रधानंज्ञातार्थमिवभवति । एवंप्रधानस्यपरमात्मनोज्ञानादप्र
धानंज्ञातमिवभवति । प्राधान्यज्ञापनार्थमेवसृष्ट्यादिकथनं । यथासोम्येत्याद्यपिसादृश्यकथनं । नचैकनखनि
कृंतनविकारःसर्वंकार्ष्णायसं । प्रधानपुरुषज्ञानाद्ग्रामोज्ञातइतिव्यपदेशोस्ति । नहिसत्यज्ञानेनमिथ्याज्ञानंभव
ति । मुक्तामुक्तयोर्भेदाभावेमुक्तस्यसंसारःसंसारिणोवामुक्तत्वंस्यात् । यद्यज्ञानकृतोभेदस्तर्हीश्वरस्याज्ञानाभा
वात्संसारिणैक्यंतेनानुभूयेत । ततश्चदुःखित्वंस्यात् । तान्यहंवेदसर्वाणिनत्वंवेत्थपरंतप । सुखंदुःखंभवोभावोभ
यंचाभयमेवच । अहिंसासमतातुष्टिस्तपोदानंयशोऽयशः । भवंतिभावाभूतानांमत्तएवपृथग्विधाः । यस्मात्क्ष
रमतीतोहमक्षरादपिचोत्तमः । अतोस्मिलोकेवेदेचप्रथितःपुरुषोत्तमः । इत्यादिनेश्वरेणापिभेदस्यैवानुभूयमा
नत्वाच्च । ततएवाभ्रांतत्वान्नमुक्तस्यापिभेदनिवृत्तिः । नचोपाधिभेदमात्रेणेश्वरस्यदुःखाभावः । हस्तपादाद्यु
पाधिभेदेपिभोक्तुरेकत्वानुभवात् । उद्यतायुधदोर्दंडाःपतितस्वशिरोक्षिभिः । पश्यंतःपातयंतिस्मकबंधाअप्य
रीन्युधीतिभारतवचनान्नविश्लेषाद्विशेषः । अतोऽनौपाधिकत्वादेवभेदस्यनमुक्तस्येश्वरैक्यं । इदंज्ञानमुपाश्रि
त्यममसाधर्म्यमागताः । सर्गेपिनोपजायंतेप्रलयेनव्यथंतिच । यदापश्यःपश्यतेरुग्मवर्णंकर्तारमीशंपुरुषंब्रह्म

योनिं। तदाविद्वान्पुण्यपापेविधूयनिरंजनःपरमंसाम्यमुपैतीत्यादिमुक्तभेदवचनेभ्यश्च।एवंप्रत्यक्षानुमानागमविरुद्धत्वादभेदविषयवत्प्रतीयमानान्यपिवाक्यानिसादृश्याद्यर्थान्येवयोजनीयानि । विरुद्धवत्प्रतीयंतआगमायत्रवैमिथः । तत्रदृष्टानुसारेणतेषामर्थोन्ववेक्ष्यतइतिब्राह्मवचनाच्च । भेदाद्यनुभवस्यभ्रांतित्वांगीकारेतदपलापयुक्तेर्नितरांभ्रांतित्वाद्भेदाद्यनुभवस्याभ्रांतित्वमेवभवति।परस्परविरुद्धयोरन्यतरनिषेधस्यान्यतरविधिनांतरीयकत्वात् । एकजीववादपक्षेतन्निष्ठानांमृत्यनंतरमपिविश्वस्यानिवृत्तत्वाद्भेदनिष्ठएवैकजीवइत्यापतति । तस्यचतत्रैवाग्रहान्नकदाचिद्भेदनिवृत्तिरित्यनिवृत्तिरेवभवति । नचैकजीवाज्ञानपरिकल्पितास्समस्ताइत्यत्रकिंचिन्मानं । अतोमुक्तेभ्योप्यन्यएवसमस्तगुणपरिपूर्णोभगवान्विष्णुरितिसिद्धं ॥ ब्रह्मेशानादिभिर्देवैर्यत्प्राप्तुंनैवशक्यते । तद्यत्स्वभावःकैवल्यंसभवान्केवलोहरे । परोमात्रयातन्वावृधाननतेमहित्वमन्वश्नुवंति । सत्यचिच्चेत्यपतयेमुक्तामुक्तोत्तमायते । नमोनारायणायार्यवृंदवंदितपद्द्वय ॥ आनंदतीर्थपुंसिंहोमायावादिदितेःसुतान् । विदार्ययुक्तिनखैररप्रतीपोविभासते ॥ १ ॥ पलायध्वंपलायध्वंत्वरयामायिदानवाः । सर्वज्ञहरिरायातितर्कागमदरारिभृत् ॥२॥ द्रवतद्रवताशुमायिनःप्रविशध्वमतंद्रितागुहाः । कमलारमणांबरा

10



॥५॥

श्रयःसमुदेत्यखिलज्ञभास्करः ॥३॥ नृहरिःसकलज्ञनामकःसमुपैतिहिमायिदानवान् । प्रपलायनमत्रतत्क्षमं त्वरयावोवसतिर्गुहासुच ॥४॥ जयत्यानंदतीर्थेष्टदेवतानरकेसरी । विपाटिताज्ञानतमःकपाटात्युरुहुंकृतः ॥५॥ जयत्यमितपौरुषःस्वजनतेष्टचिंतामणिः । अजेशमुखवंदितोगुणगणार्णवःश्रीपतिः ॥६॥ सर्वज्ञसन्मुनींद्रोच्चसन्मनःपंकजालयः । अजितोजयतिश्रीशोरमाबाहुलताश्रयः ॥७॥ ॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितस्तत्वोद्योतःसंपूर्णः ॥ ॥ ॥ ॥





15

अथैतरेयोपनिषच्चतुर्थारण्यकं ॥ ॐ ॥ विदामघवन्विदागातुमनुशंसिषोदिशः ॥ शिक्षाशचीनांपतेपूर्वीणांपु
रूवसो ॥ आभिष्ट्वमभिष्टिभिःप्रचेतनप्रचेतय ॥ इंद्रद्युम्नायनइषएवाहिशक्रः ॥ रायेवाजायवज्रिवःशविष्ठवज्रि
न्नृंजसे ॥ मंहिष्ठवज्रिन्नृंजसआयाहिपिबमत्स्व ॥ विदारायःसुवीर्यंभुवोवाजानांपतिर्वशाँअनु ॥ मंहिष्ठवज्रि
न्नृंजसेयःशविष्ठःशूराणां ॥ योमंहिष्ठोमघोनांचिकित्वोअभिनोनय ॥ इंद्रोविदेतमुस्तुषेवशीहिशक्रः ॥ तमूतयेह
वामहेजेतारमपराजितं ॥ सनःपर्षदतिद्विषःक्रतुश्छंदऋतंबृहत् ॥ इंद्रंधनस्यसातयेहवामहेजेतारमपराजितं ॥
सनःपर्षदतिद्विषःसनःपर्षदतिस्रिधः ॥ पूर्वस्ययत्तेअद्रिवःसुम्नआधेहिनोवसो ॥ पूर्तिःशविष्ठशस्यतईशेहिशक्रः
॥ नूनंतंनव्यंसन्यसेप्रभोजनस्यवृत्रहन् ॥ समन्येषुब्रवावहैशूरोयोगोषुगच्छतिसखासुशेवोअद्वयाः ॥ एवाह्येवै
वाह्यग्नाँ ३ इ ॥ एवाह्येवैवाहींद्रँ ॥ एवाह्येवैवाहिविष्णाँ ३ उ ॥ एवाह्येवैवाहिपूषन् ॥ एवाह्येवैवाहिदेवाः ॥ ए
वाहिशक्रोवशीहिशक्रोवशाँअनु ॥ आयोमन्यायमन्यवउपोमन्यायमन्यवे ॥ उपेहिविश्वध ॥ विदामघवन्वि
दाँ २ ॥ १ ॥ इतिचतुर्थारण्यकेप्रथमोध्यायः ॥ ॥ ७ ॥ ॥ ॥
ॐ ॥ गायत्रीछंदः ॥ १ ॥ १ ॥ ३० ॥ आत्वावहंतुहरयोवृषणंसोमपीतये ॥ इंद्रत्वासूरचक्षसः ॥ इमाधाना

घृतस्नुवोहरीइहोपवक्षतः॥इंद्रंसुखतमेरथे॥इंद्रंप्रातर्हवामहइंद्रंप्रयत्यध्वरे॥इंद्रंसोमस्यपीतये॥पक्तिछंदः॥१॥
॥६॥३॥उपोषुश्रृणुहीगिरोमघवन्मातथाइव॥यदानःसूनृतावतःकरआदर्थयासइद्योजान्विंद्रतेहरी॥सुसंदृ
शंत्वावयंमघवन्वंदिषीमहि॥प्रनूनंपूर्णवंधुरःस्तुतोयाहिवशाँअनुयोजान्विंद्रतेहरी॥सघातंवृषणंरथमधितिं
ष्ठातिगोविदं॥यःपात्रंहारियोजनंपूर्णमिंद्रचिकेततियोजान्विंद्रतेहरी॥उष्णिक्छंदः॥६॥१॥५॥यदिंद्रपृतना
ज्येदेवास्त्वादधिरेपुरः॥ आदित्तेहर्यताहरीववक्षतुः॥ ६॥ १ ॥६॥ यदावृत्रंनदीवृतंशवसावज्रिन्नवधीः॥आ
दित्तेहर्यताहरीववक्षतुः॥यदातेविष्णुरोजसात्रीणिपदाविचक्रमे॥ आदित्तेहर्यताहरीववक्षतुः॥बृहतीछंदः॥
॥३॥३॥८॥ अयंतेअस्तुहर्यतःसोमआहरिभिस्सुतः॥ जुषाणइंद्रहरिभिर्नआगह्यातिष्ठहरितंरथं॥ हर्यन्नुषस
मर्चयःसूर्यंहर्यन्नरोचयः॥ विद्वांश्चिकित्वान्हर्यश्ववर्धसइंद्रविश्वाअभिश्रियः ॥ द्यामिंद्रोहरिधायसंपृथिवींह
रिवर्पसं॥ अधारयद्धरितोर्भूरिभोजनंययोरंतर्हरिश्चरत्॥ द्विपदाऋक्॥५॥ ३॥२५॥ आधूर्ष्वस्मैदधाताश्वा
निंद्रोनवज्रीहिरण्यबाहुः॥एषब्रह्मायऋत्वियइंद्रोनामश्रुतोगृणे॥ विश्रुतयोयथापथोइंद्रत्वद्यंतिरातयः॥त्वा ॥२४८॥
मिच्छवसस्पतेयंतिगिरोनसंयतः॥त्रिष्टुप्छंदः॥५॥३॥१३॥ ब्रह्मन्वीरब्रह्मकृतिंजुषाणोर्वाचीनोहरिभिर्याहितू

यं॥अस्मिन्नूषुसवनेमादयस्वोपब्रह्माणिश्रृणवइमानः॥जगतीछंदः॥८॥५॥५॥ प्रतेमहेविदथेशंसिषंहरीप्रतेव
न्वेवनुषोहर्यतंमदं॥घृतंनयोहरिभिश्चारुसेचतआत्वाविशंतुहरिवर्पसंगिरः॥हरिंहियोनिमभियेसमस्वरन्हि
न्वंतोहरीदिव्यंयथासदः॥आयंपृणंतिहरिभिर्नधेनवइंद्रायशूषंहरिवंतमर्चत॥सोअस्यवज्रोहरितोयआयसो
हरिर्निकामोहरिरागभस्त्योः॥द्युम्नीसुशिप्रोहरिमन्युसायकइंद्रेनिरूपाहरितामिमिक्षिरे॥३॥अतिछंदः॥२॥
॥६॥२८॥त्रिकद्रुकेषुमहिषोयवाशिरंतुविशुष्मस्तृपत्सोममपिबद्विष्णुनासुतंयथावशत् ॥ सईंममादमहिकर्म
कर्तवेमहामुरुंसैनंसश्चद्देवोदेवंसत्यमिंद्रंसत्यइंदुः॥१॥अधत्विषीमाँअभ्योजसाक्रिविंयुधाभवदारोदसीअपृण
दस्यमज्मनाप्रवावृधे॥अधत्तान्यंजठरेप्रेमरिच्यतसैनंसश्चद्देवोदेवंसत्यमिंद्रंसत्यइंदुः ॥१॥ २॥ साकंजातःक्रतु
नासकमोजसाववक्षिथसाकंवृद्धोवीर्यैस्सासहिर्मृधोविचर्षणिः॥दाताराधस्तुवतेकाम्यंवसुसैनंसश्चद्देवोदेवंस
त्यमिंद्रंसत्यइंदुः॥३॥वेपशक्वर्यः ॥८॥७॥२१ ॥ प्रोष्वस्मैपुरोरथमिंद्रायशूषमर्चत॥अभीकेचिदुलोककृत्संगेस
मत्सुवृत्रहास्माकंबोधिचोदितानभंतामन्यकेषांज्याकाअधिधन्वसु ॥१॥ त्वंसिंधूँरवासृजोधराचोअहन्नहिं ॥
अशत्रुरिंद्रजज्ञिषेविश्वंपुष्यंतिवार्यंतंत्वापरिष्वजामहेनभंतामन्यकेषांज्याकाअधिधन्वसु ॥२॥ विषुविश्वाअ

रातयोर्योनशंतनोधियः॥अस्तासिशत्रवेवधंयोनइंद्रजिघांसतियातेरातिर्ददिर्वसुनभंतामन्यकेषांज्याकाअ
धिधन्वसु॥३॥६॥५॥५॥प्रप्रवस्त्रिष्टुभमिषंमंदद्वीरायेंदवे॥धियावोमेधसातयेपुरंध्याविवासति॥१॥नदंवओ
दतीनांनदंयोयुवतीनां॥पतिंवोअघ्न्यानांधेनूनामिषुध्यसि॥२॥ताअस्यसूददोहसःसोमंश्रीणंतिपृश्नयः॥ज
न्मन्देवानांविशस्त्रिष्वारोचनेदिवः॥३॥६॥५॥६॥अर्चतप्रार्चतप्रियमेधासोअर्चत॥अर्चंतुपुत्रकाउतपुरंनधृ
ष्ण्वर्चत॥१॥अवस्वरातिगर्गरोगोधापरिसनिष्वणत्॥पिंगापरिचनिष्कददिंद्रायब्रह्मोद्यतं॥२॥आयत्पतंत्ये
न्यस्सुदुघाअनपस्फुरः॥अपस्फुरंगृभायतसोममिंद्रायपातवे॥३॥६॥५॥७॥ योव्यतीँरफाणयत्सुयुक्ताँउपदा
शुषे।तक्वोनेतातदिद्वपुरुपमायोअमुच्यत॥१॥अतीदुशक्रओहतइंद्रोविश्वाअतिद्विषः॥भिनत्कनीनओदनं
पच्यमानंपरोगिरा॥२॥अर्भकोनकुमारकोधितिष्ठन्नवंरथं॥सपक्षन्महिषंमृगंपित्रेमात्रेविभुक्रतुं॥३॥एतास्स
र्वाःप्रज्ञातानुष्टुभः॥६॥५॥६॥उद्यद्ब्रध्नस्यविष्टपंगृहमिंद्रश्चगन्वहि॥मध्वःपीत्वासचेवहित्रिःसप्तसख्युःपदे॥इति
त्रिःपरिदध्यात्॥८॥५॥७॥ अपाःपूर्वेषांहरिवःसुतानामथोइदंसवनंकेवलंते॥ममद्धिसोमंमधुमंतमिंद्रसत्रा
वृषन्जठरआवृषस्व॥ ॥इतिऋङ्मंत्रःसंपूर्णः॥इतिश्रीमत्कर्मनिर्णयमूलभूतवेदभागःसंपूर्णः ॥ ७ ॥ ॥

॥

श्रीमद्धनुमद्भीममध्वांतर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवायनमः ॥ कर्मनिर्णयटीकोक्तानिऋग्वेद
ब्राह्मणचतुर्थपंचिकाद्याध्यायादिमखंडानिलिख्यंते॥ ॐदेवावैप्रथमेनाह्नेंद्रायवज्रंसमभरंस्तंद्वितीयेनाह्नासिं
चंस्तंतृतीयेनाह्नाप्रायच्छंस्तंचतुर्थेहन्प्राहरत्तस्माच्चतुर्थेहन्षोळशिनंशंसतिवज्रोवाएषयत्षोळशीतद्यच्चतुर्थेह
न्षोळशिनंशंसतिवज्रमेवतत्प्रहरतिद्विषतेभ्रातृव्यायवधंयोस्यःस्तृत्यस्तस्मैस्तर्तवैवज्रोवैषोळशीपशवउक्था
नितंपरस्तादुक्थानांपर्यस्यशंसतितंयत्परस्तादुक्थानांपर्यस्यशंसतिवज्रेणैवतत्षोळशिनापशून्परिगच्छतित
स्मात्पशवोवज्रेणैवषोळशिनापरिगतामनुष्यानभ्युपावर्ततेतस्मादश्वोवापुरुषोवागौर्वाहस्तीवापरिगतएव
स्वयमात्मनेऽतएववाचाभिषिद्धउपावर्ततेवज्रमेवषोळशिनंपश्यन्वज्रेणैवषोळशिनापरिगतोवाग्घिवज्रोवा
क्षोळशीतदाहुःकिंषोळशिनःषोळशित्वमितिषोळशःस्तोत्राणांषोळशःशस्त्राणांषोळशभिरक्षरैरादत्तेषोळश
भिःप्रणौतिषोळशपदांनिविदंदधातितत्षोळशिनःषोळशित्वंद्वेवाअक्षरेअतिरिच्येतेषोळशिनोऽनुष्टुभमभि
संपन्नस्यवाचोवावतौस्तनौसत्यानृतेवाअवत्येनंसत्यंनैनमनृतंहिनस्तियएवंवेद॥खंडः॥ गौरिवीतंषोळशिसा
मकुर्वीततेजस्कामोब्रह्मवर्चसकामस्तेजोवैब्रह्मवर्चसंगौरिवीतंतेजस्वीब्रह्मवर्चसीभवतियएवंविद्वान्गौरिवीतं

षोळशिसामकुरुतेनानदंषोळशिसामकर्तव्यमित्याहुरिंद्रोवैवृत्रायवज्रमुदयच्छत्तमस्मैप्राहरत्तमभ्यहनत्सोभि
हतोव्यनदद्यद्व्यनदत्तन्नानदंसामाभवत्तन्नानदस्यनानदत्वमभ्रातृव्यंवाएतद्भ्रातृव्यहासामयन्नानदमभ्रातृव्यो
भ्रातृव्यहाभवतियएवंविद्वान्नानदंषोळशिसामकुरुतेतद्यदिनानदंकुर्युरविहृतःषोळशीशंस्तव्योविहृतासुहि
तासुस्तुवतेयदिगौरिवीतंविहृतःषोळशीशंस्तव्योविहृतासुहितासुस्तुवते॥खंडः॥अथातश्छंदांस्येवव्यतिषज
त्यात्वावहंतुंहरयउपोषुशृणुहीगिरइतिगायत्रीश्चपङ्क्तीश्चव्यतिषजतिगायत्रोवैपुरुषःपाङ्क्ताःपशवःपुरुषमेवत
त्पशुभिर्व्यतिषजतिपशुषुप्रतिष्ठापयतियद्गायत्रीचपङ्क्तिश्चतेद्वेअनुष्टुभौतेनोवाचोरूपादनुष्टुभोरूपाद्वज्ररू
पान्नैतियदिंद्रपृतनाज्येऽयंतेअस्तुहर्यतइत्युष्णिहश्चबृहतीश्चव्यतिषजत्यौष्णिहोवैपुरुषोबार्हताःपशवःपुरुषमे
वतत्पशुभिर्व्यतिषजतिपशुषुप्रतिष्ठापयतियदुष्णिक्चबृहतीचतेद्वेअनुष्टुभौतेनोवाचोरूपादनुष्टुभोरूपाद्वज्ररू
पान्नैत्याधूर्ष्वस्मैब्रह्मन्वीरब्रह्मकृतिंजुषाणइतिद्विपदांचत्रिष्टुभंचव्यतिषजतिद्विपाद्वैपुरुषोवीर्यंत्रिष्टुप्पुरुषमेवत
द्वीर्येणव्यतिषजतिवीर्येप्रतिष्ठापयतितस्मात्पुरुषोवीर्येप्रतिष्ठितःसर्वेषांपशूनांवीर्यवत्तमोयद्द्विपदाचविंशत्य
क्षरात्रिष्टुप्चतेद्वेअनुष्टुभौतेनोवाचोरूपादनुष्टुभोरूपाद्वज्ररूपान्नैत्येषब्रह्माप्रतेमहेविदथेशंसिषंहरीइतिद्विपदा

श्चजगतीश्चव्यतिषजतिद्विपाद्वैपुरुषोजागताःपशवःपुरुषमेवतत्पशुभिर्व्यतिषजतिपशुषुप्रतिष्ठापयतितस्मा
त्पुरुषःपशुषुप्रतिष्ठितोत्तिचैनानधिचतिष्ठतिवशेचास्ययदुद्विपदाचषोळशाक्षराजगतीचतेद्वेअनुष्टुभौतेनोवा
चोरूपादनुष्टुभोरूपाद्वज्ररूपान्नैतित्रिकद्रुकेषुमहिषोयवाशिरंप्रोष्वस्मैपुरोरथमित्यतिच्छंदसःशंसतिच्छंदसां
वैयोरसोत्यक्षरत्सोतिच्छंदसमभ्यत्यक्षरत्तदतिच्छंदसोतिच्छंदस्त्वंसर्वेभ्योवाएषच्छंदोभ्यस्सन्निर्मितोयत्षोळ
शीतद्यदतिच्छंदसःशंसतिसर्वेभ्यएवैनंतच्छंदोभ्यःसंनिर्मिमीतेसर्वेभ्यश्छंदोभ्यःसनिर्मितेनषोळशिनाराध्नो
तियएवंवेद ॥ खंडः ॥महानाम्नीनामुपसर्गानुपसृजत्ययंवैलोकःप्रथमामहानाम्न्यंतरिक्षलोकोद्वितीयासौलो
कस्तृतीयासर्वेभ्योवाएषलोकेभ्यस्सन्निर्मितोयत्षोळशीतद्यन्महानाम्नीनामुपसर्गानुपसृजतिसर्वेभ्यएवैनंतं
लोकेभ्यस्सन्निर्मिमीतेसर्वेभ्योलोकेभ्यस्संनिर्मितेनषोळशिनाराध्नोतियएवंवेद ॥ प्रप्रवस्त्रिष्टुभमिषमर्चंतप्रा
र्चतयोव्यतीँरफाणयदितिप्रज्ञाताऽनुष्टुभः शंसंतितद्यथेहचेहचापथेनचरित्वापंथानंपर्यवेयात्ताहक्तद्यत्प्रज्ञाता
ऽनुष्टुभःशंसतिसयोव्याप्तोगतश्रीरिवमन्येताविहृतंषोळशिनंशंसयेन्नेच्छंदसांकृच्छ्रादवपद्याइत्यथयःपाप्मान
मपजिघांसुःस्याद्विहृतंषोळशिनंशंसयेद्यतिषक्तइववैपुरुषःपाप्मनाव्यतिषक्तमेवास्मैतत्पाप्मानंशमलमपहंत्य

पपाप्मानंहतेयएवंवेदोयद्ब्रह्मस्यविष्टपमित्युत्तमयापरिदधातिस्वर्गोवैलोकोब्रह्मस्यविष्टपंस्वर्गमेवतंलोकंयज
मानंगमयत्यपाःपूर्वेषांहरिवःसुतानामितियजतिसर्वेभ्योवाएषसवनेभ्यस्संनिर्मितोयत्षोळशीतद्यदपाःपूर्वे
षांहरिवःसुतानामितियजतिपीतवद्वैप्रातःसवनंप्रातःसवनादेवैनंतत्संनिर्मिमीतेऽथोइदंसवनंकेवलंतइति
माध्यंदिनंवैसवनंकेवलंमाध्यंदिनादेवैनंतत्सवनात्संनिर्मिमीतेममद्धिसोमंमधुमंतमिंद्रेतिमद्वद्वैतृतीयसवनंतृ
तीयसवनादेवैनंतत्संनिर्मिमीतेसत्रावृषन्जठरआवृषस्वेतिवृषण्वद्वैषोळशिनोरूपंसर्वेभ्योवाएषसवनेभ्यस्सं
निर्मितोयत्षोळशीतद्यदपाःपूर्वेषांहरिवःसुतानामितिजयतिसर्वेभ्यएवैनंतत्सवनेभ्यःसंनिर्मिमीतेसर्वेभ्यःस
वनेभ्यःसन्निर्मितेनषोळशिनाराध्नोतियएवंवेदमहानाम्नीनांपंचाक्षरानुपसर्गानुपसृजत्येकादशाक्षरेषुपादेषु
सर्वेभ्योवाएषच्छंदोभ्यःसंनिर्मितोयत्षोळशीतद्यन्महानाम्नीनांपंचाक्षरानुपसर्गानुपसृजत्येकादशाक्षरेषुपा
देषुसर्वेभ्यएवैनंतच्छंदोभ्यःसंनिर्मिमीतेसर्वेभ्यश्छंदोभ्यस्संनिर्मितेनषोळशिनाराध्नोतियएवंवेद ॥ खंडः ॥ ॥२४७॥
॥ ४ ॥ ऋग्वेदब्रह्मणचतुर्थपंचिकायांचतुर्थखंडःसंपूर्णः ॥ ॥ ७ ॥ ॥

19

श्रीमद्धनुमद्भीममध्वांतर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवायनमः॥ ॥ॐ॥ यइज्यतेविधीशानशक्र
पूर्वैःसदामखैः। रमाप्रणयिनेतस्मैसर्वयज्ञभुजेनमः॥ महानाम्नीनामृचामुपसर्गायेउपसर्जनभूतास्तानुपसृज
तिसंयोजयति। महन्नामयास्वृक्षुविद्यतेतामहानाम्न्यः। परस्यब्रह्मणोयन्नामैंद्रादिकंतन्महार्थत्वान्महत्। म
हद्धितत्परंब्रह्म। अशेषगुणपूर्तेः। तत्रैकआहुरगुणंब्रह्मेति। नतद्युक्तं। श्रुतियुक्तिविरोधात्। तथाहिश्रुतिः।
सत्यंज्ञानमनंतंब्रह्म। विज्ञानमानंदंब्रह्म। यःसर्वज्ञःसर्वविद्यस्यज्ञानमयंतपः। तस्मादेतद्ब्रह्मनामरूपमन्नंचजा
यते। दिव्योह्यमूर्तःपुरुषःसबाह्याभ्यंतरोह्यजः। अप्राणोह्यमनाःशुभ्रोह्यक्षरात्परतःपरः। एतावानस्यमहिमा
अतोज्यायांश्चपुरुषः। योनःपिताजनितायोविधाताधामानिवेदभुवनानिविश्वा। पूर्णमदःपूर्णमिदंपूर्णात्पू
र्णमुदच्यते। पूर्णस्यपूर्णमादायपूर्णमेवावशिष्यते। सर्वकर्मासर्वकामःसर्वगंधःसर्वरसःसर्वमिदमभ्यात्तोवा
क्यनादरः। विष्णोर्नुकंवीर्याणिप्रवोचंयःपार्थिवानिविममेरजांसि। परोमात्रयातन्वावृधानंनतेमहित्वमन्वश्नु
वंति। नतेविष्णोजायमानोनजातोदेवमहिम्नःपरमंतमाप्त्यादिका। युक्तिश्च। बुद्धिपूर्वसर्वकर्तृत्वात्सर्वज्ञ
त्वादयोगुणायुक्ताः। कर्तृत्वात्सगुणंब्रह्मपुरुषंपुरुषर्षभमितिचभागवते। नचैकोदेवःसर्वभूतेषुगूढःसर्वव्यापीस

र्वभूतांतरात्मा।कर्माध्यक्षःसर्वभूताधिवासःसाक्षीचेताकेवलोनिर्गुणश्चेत्यादिविरोधः।सत्त्वादिगुणाभावोक्ते स्तत्र।अन्यथैकोदेवःसर्वभूतेषुगूढइत्यादीनामपिगुणत्वात्स्वोक्तिविरोधः।नचनिर्विशेषंनामकिंचिदस्ति। निर्विशेषत्वोक्तेरेवव्याहतत्वात्। निर्विशेषत्वेनविशिष्टंनवेत्युक्तेयद्यविशिष्टंतर्हिनविशेषनिराकरणं। विशेषवत्त्वमेवभवति। यदितेनविशिष्टंसएवविशेषइतिव्याहतिः। नचनिर्विशेषत्वेकिंचिन्मानं। अशेषविशेषवचनानुभवयुक्तिविरोधश्च। नचमिथ्याविशेषवत्। व्याहतेः। मिथ्याविशेषइत्युक्तेह्यसद्विशेषइत्येवभवति। तथाच विशेषविशिष्टपक्षोक्तदोषएव। नचानिर्वचनीयविशेषइतिभवति। अनिर्वचनीयासिद्धेः। नहितत्रप्रत्यक्षमस्ति। मिथ्याशब्दस्त्वभाववाच्येव। तदन्यत्रप्रमाणाभावात्। नचान्यत्प्रमाणं। प्रतिज्ञाव्याहतेः। नहिसदंतरादसतश्चान्यत्सदसद्विलक्षणंप्रसिद्धं।असन्नभवतीत्युक्तेद्वौनञौप्रकृतमर्थंसातिशयंगमयतइतिसदेवभवति। असदंतरंवाविशेषविवक्षायां। किंचैतद्वैलक्षण्यं। भेदोऽभेदोभेदाभेदोवा। नतावद्भेदः। अनंगीकारात्। व्यावहारिकभेदश्चानिर्वाच्यसिद्धौवक्तव्यः। नचाव्यावहारिकंकिंचित्। नचाशेषव्यवहारनिवृत्तौकिंचिन्मानं। नच मिथ्यातथ्ययोःसामान्यंव्यावहारिकत्वंधूमबाष्पयोर्धूमत्ववत्। नचाभेदोनंगीकारादेव। तथैवोभयं। अभेदे

चानिर्वाच्यब्रह्मणोस्तच्छब्दयोःपर्यायत्वं । नचव्यावर्त्यविशेषेणापर्यायत्वंकचित् । व्यावर्त्यविशेषस्तद्व्यावृत्तेब्रह्मणिविशेषमापादयतिचेद्विशिष्टवाक्यार्थता । नचेन्नब्रह्मज्ञानार्थिनेपदांतरंवाच्यं। असंगतत्वात्। मिथ्याविशेषस्यचासिद्धिरुक्ता। अतोन्योन्याश्रयतानवस्थितिश्चक्रकंवा । भेदाभेदविलक्षणमप्युक्तरीत्यैवापाकृतं।किंचासद्विलक्षणमित्यत्राभावान्यविरोधानांमध्येनञःकोर्थः । यद्यभावोन । असद्विलक्षणत्वंभावत्वमेवजगतःस्यात्। नचसतोन्यस्मादसतोविलक्षणंजगत्। असतोन्यत्वादिधर्मानंगीकाराद्ब्रह्मणश्च । असतोऽनिर्वचनीयत्वांगीकाराच्चनवैलक्षण्यंततोऽनिर्वाच्यस्य । तथापिचेद्वैलक्षण्यंनानिर्वचनीयत्वंजगतः । नचविरोधः । विरोधिनोरन्यतरनिषेधेऽन्यतरव्याप्तत्वानुभवात्।अविद्यमानंनभवतीत्युक्तेविद्यमानमित्येवहिसर्वलोकानुभवः। अतोनंतगुणोभगवान्नारायणइतिसिद्धं।।नचसिद्धेर्थेवाक्यस्यप्रामाण्याभावादीश्वराद्यसिद्धिः।सिद्धातिरिक्तकार्याभावात्। लिङाद्यर्थस्त्विष्टसाधनत्वमेव। नहिकर्तव्यत्वंनामेष्टसाधनत्वादन्यत्किंचित्। तन्मानाभावात्। शब्दस्तुनतद्व्यक्तीत्युक्तं । लिङादेरिष्टसाधनार्थत्वेनैवकृतार्थत्वेतदन्यकार्यकल्पनेकल्पनागौरवंच । नचतत्कल्पकंकिंचित् । विप्रतिपत्तौचान्यन्मानंवक्तव्यंतद्भावे । नचानुमा । अप्रसिद्धविशेषणत्वात् । नचार्थापत्तिः ।

अनुपपत्त्यभावात्।कार्याभावादेवकार्यान्वयिनि[कार्यान्वयान्वयिनिवा]व्युत्पत्तिरित्यादिदूरतोनिरस्तं। का
र्यान्वितेव्युत्पत्तिरितिवदतोकार्यान्वितेव्युत्पत्तिरित्युक्तेकिमुत्तरं।अध्याहारइत्युक्तेलोपइत्युत्तरं।अशेषसिद्धप
दानामर्थलोपाल्लिङाद्यर्थमात्रलोपएवगरीयान्।हससिहसामीत्यादिसिद्धार्थएवबालानांव्युत्पत्तेः।प्रथमप्राप्त
त्वान्नतत्त्यागेकारणं।तथैवव्युत्पत्तिदर्शनाच्च।अतःसिद्धार्थेप्रामाण्यसिद्धेश्चसिद्धंमहागुणवत्त्वंविष्णोः॥ ताश्च
विदामघवन्नित्याद्याः। हेमघवन् धनवन् यशस्विन् मखपतेतिवा। तंवाएतंमघ[ख]वंतंसंतंमघवानित्याचक्षतेप
रोक्षेण।परोक्षप्रियाइवहिदेवाःप्रत्यक्षद्विषः।तेभिरिंद्रंचोदयदात्तवेमघं।तन्नआयातुमघाय।यशोवावमघं। मघ
मनुप्रापत्सि।आमामेतुमघं।मघमनुप्रापत्सि।धनंवावमघमित्यादिश्रुतिभ्यः।गातुंत्वांस्तोतुं।विदवेदयेतिसामा
न्यतोपेक्षिताशेषवेदनमुक्तातात्कालिकापेक्षितंप्रार्थयति।गातुंविदेति।त्वमेवानुशंसिषोदिशःमार्गान्।आत्म
नःस्तुतिप्रकारांस्त्वमेवोपदिशेत्यर्थः।पूर्वीणांभगवत्संप्रदायागतानांपरमविद्यानामर्थेशिक्ष। शचीनांविद्यानां
पतेवाचांपतइतिवा । पुरूवसोबहुवित्तबहुज्ञानेतिवा । बहुषुवसतिबहूनामावासइतिवा॥१॥ आभिःअभिष्टि ॥२५१॥
भिःएवंभूतैस्त्वत्पर्येषणैस्त्वत्प्रार्थनैःकंचिन्मदादिकंप्रचेतयप्रबोधय। प्रकृष्टचेतनसर्वज्ञपरमात्मन्। द्युम्नायज्ञाना

य।वित्ताययशसेवा।इषेअन्नायचनःप्रबोधय।एतादृशोहिशक्रः। शक्रएवेतिवा।शक्तिरतिरूपत्वाच्छक्रः ॥२॥
रायेवित्ताय । वाजायअन्नाय । वज्रिणंइंद्रंवर्तयतीतिवज्रिवः । नियामकत्वेनगच्छतीतिवा । शविष्ठबलव
त्तमसुखवत्तमेतिवा । ऋंजसेप्रेरयसिसर्वान् । मंहिष्ठवज्रिन्नृंजसइत्यभ्यासस्तात्पर्यार्थः । मत्स्वमदंकुरु ॥ ३ ॥
विद्वेदयलंभयरायःसुवीर्यंच । वाजानांप्रजानांपतिर्भुवःअभवः । प्रजावैवाजइतिश्रुतेः । वशाँअनुयथाव
शं । वशइच्छायामितिधातोः । यथावशंयथेच्छं । शूराणांसकाशाद्बलवत्तमः ॥ ४ ॥ मघोनांयशस्विनांम
हत्तमः । चिकित्वःज्ञातःकर्तरितिवा । नःअभितःसर्वतोनय । इंद्रोविदेसमस्तंव्यजानात् । तमेवस्तुषे ॥ ५ ॥
ऊतयेरक्षायैअभिप्रायसिद्धयेवा । सनोद्विषःशत्रूनतिपारयतुपापानितमांसिवा । क्रतुःज्ञानरूपः । छंदःइच्छा
रूपः । छंद्यत्वाच्छादनत्वाद्वा । ऋतंअशेषशास्त्रावगतं ॥ ६ ॥ सातयेलब्धये । स्रिधःविनाशान् ॥ ७ ॥
पूर्वस्यानादेःसतस्तेसकाशात्यत्सुम्नंसुखंतस्मिन्नःआधेहि । तवपूर्तिःशस्यते ॥८॥ तन्नव्यंस्तुत्यं । ब्रह्मतत्स
म्यग्घृदिमन्यसे । जनस्योपदेशेनतत्स्वरूपेषुत्वंचाहंचसंब्रवावहै । गोषुज्ञानेषुगच्छतिज्ञानविषयोभवति । सु
शेवःसुसुखः । समाधिकवर्जितोऽद्वयः ॥ ९ ॥ एवाह्येवैवाहीत्यस्यादिदेवतानांसंवादरूपेणोक्तमर्थमतिशये

नावधारयति।अभ्यासोहितात्पर्यार्थः।एवंहिएवमेवहीत्यर्थः।विनिश्चितेतुसंवादेविभागोरंगएवचेतिशब्दनि
र्णये। अतोम्नाइइत्यादि। एवमेवहिशक्तोवशाननुयथावशंस्वतंत्रोवर्ततइत्यर्थः।अयपयगताविितिधातोःआ
योइत्यायतिः। उपोइतिवदतिशयार्थओकारः। ओअतिशयइतिचसूत्रं। आयोजानातीत्यायोमन्यः। समी
पस्थमपिजानातीत्युपोमन्यः।अन्येषामिंद्रियाणांपराङ्मुखत्वान्नह्यांतरंजानंति। अयंत्वांतरमप्यापरोक्ष्येणप
श्यति। अयनेनप्राप्यंदूरस्थमायोइतिवा। मनुअवबोधनइतिधातोर्मन्युरितिज्ञानी। बाह्यज्ञायज्ञानिनेआंतर
ज्ञायज्ञानिनइत्यभ्यासोहितात्पर्यार्थः। एवंविधंमद्भतंत्वामुद्दिश्यैवोपेहि। विश्वधविश्वधारक। समीपतोदूरत
श्चत्वांमन्यमानायमह्यंमन्यवेज्ञानायमामुपेहीतिवा। समीपेदूरतोभिज्ञंत्वामुद्दिश्यैवमद्भतं।एहिविष्णोनमेश
क्तिस्त्वदाह्वानेहिमामुप। इतिब्रह्मास्तुवद्विष्णुंतन्नाभ्युत्थितपद्मगइतिपाद्मे। समीपेदूरतश्चैवध्यायंतंत्वांसदा
विभो। मामेहिज्ञानदानायेत्याहगाधिसुतोहरिमितिस्कांदे।ओतमस्मिञ्जगद्यस्मादोमित्युक्तोहरिःसदा।तमे
वजगदाधारंयतयःपर्युपासतइतिमान्यसंहितायां। इंद्रोवाएताभिर्महानात्मानंनिरमिमीतेत्यस्याप्युक्तएवा
र्थः।निर्माणंनामात्मनस्तद्याख्यानेनख्यापनं।नह्यन्यथातासांकरणत्वंभवति।यस्तद्वेदसपितुष्पितासदिति

श्रुतिः।त्रीणिपदानिहितागुहासुयस्तद्वेदसपितुष्पितासत्। स्त्रियःसतीस्ताँउमेपुंसआहुःपश्यदक्षण्वान्नविचेत
दंधः।कविर्यःपुत्रःसईमाचिकेतयस्ताविजानात्सपितुष्पितासत्। इत्यादिश्रुतिभ्योविज्ञानमेवतन्निर्माणं।इंद्रए
कंसूर्यएकंजजानवेनादेकंस्वधयानिष्टतक्षुरित्यादेर्विज्ञापनंवा । प्रचेतनप्रचेतय । आयाहिपिबमत्स्व।क्रतुश्छंद
ऋतंबृहत्। सुम्नआधेहिनोवसोइत्युपसर्गाः।अंशाअप्यंश्यपेक्षयोपसर्गाभवंति।उपसृष्टत्वादुपसर्गाः।अंतर्गतंब
हिर्गतंचद्विधास्यादुपसर्जनं । हस्तबद्धेतिवच्चैवपदानांचोपसर्गवदितिशब्दनिर्णये।अधत्तान्यंजठरेप्रेमरिच्यत
प्रचेतन । दाताराधस्तुवतेकाम्यंवसुप्रचेतय । अस्माकंबोधिचोदितायाहिपिबमत्स्व। तंत्वापरिष्वजामहेक्रतु
श्छंदऋतंबृहत्॥ यातेरातिर्ददिर्वसुसुम्नआधेहिनोवसोइत्युपसृजति। अशेषमहानाम्न्यर्थसंस्मरणपरिज्ञानपूर्व
कमुपसर्गसंयोजनंकर्तव्यमित्येतदर्थत्वेनमहानाम्नीप्रशंसाक्रियते । अन्यथातावन्मात्रप्रशंसामृतेअशेषमहा
नाम्नीप्रशंसायाव्यर्थत्वात्।तृचविभागेन विदामघवन् तमूतये नूनमितिवातिस्रोमहानाम्न्यः। प्रथमायामहा
नाम्नीतद्वाच्यःपार्थिवोहरिः। द्वितीयायाआंतरिक्ष्यस्तृतीयायाद्युगःप्रभुरित्यृक्संहितायां। तृचास्तिस्रोमहा
नाम्न्यःपंचर्चाप्रथमापरा। तृचाद्यृचाचनिगदैस्तातीयासप्तभिर्युता।इतित्रेधाविभागःस्याज्जपध्यानादिकर्मस्वि

तिच। त्रिलोकगेनहरिणानिर्मितःषोळशीक्रतुः। एवंज्ञात्वाहरिंतंचकर्मकुर्वन्नजायतइतिप्रवृत्ते। एवाह्येवैवाही
त्यस्यार्थोप्युक्तावधारणरूपत्वात्पूर्वोक्तार्थपरिज्ञानंविनानस्मर्तुंशक्यते। एवंनिर्मितेनषोळशिनाऋद्धोभवत्येवं
वित्। प्रप्रवः। हेऋत्विजःप्रजावावस्त्रिष्टुभमिषंत्रिष्टुभाख्यमन्नमिंद्रःपरमेश्वरःसोमायआविवासति। पुरंध्याधिया
अशेषप्राणिदेहाश्रययास्वबुद्ध्याप्रप्रप्रकर्षेणाततितरांशंस्यमानात्रिष्टुप्प्रीतिंकरोति। सोमपानार्थमित्यर्थः। मंद
द्वीरायतस्यवीरस्यपरमेश्वरस्यमंदंप्रीतिंकरोतीतिमंदद्वीरःसोमः। नत्वात्मप्रयोजनायप्रीतिंकरोतिकिंतर्हिवो
मेधसातयेयज्ञसिद्ध्यर्थं। वइतिगुरुत्वादीश्वरंप्रत्येववाबहुवचनं। तदावोन्नंत्रिष्टुभंवोमेधसातयेभवद्दैवत्ययज्ञसि
द्ध्यर्थंभवान्प्रप्राविवासतीत्यर्थः॥१॥नदंवः। ओदतीनांउंदनकर्त्रीणां वःअपांभवदीयानांपतिं वःपुरुषंप्राणंनदं
नदनकर्तारंप्रतिइषुध्यसिपतिर्भवसि। सृष्टौसृष्टौयोयःप्राणस्तंतंप्रतिपतिर्भवसीतिनदमितिपुनर्वचनं। योयुवती
नांगमनशीलानामाकाशेपोह्यमानानामघ्न्यानांधूमरूपेणादाह्यानांरेतोरूपेणाजराणांवाधेनूनांजगत्पोष
काणां। धिनुपुष्टावितिधातोः। तानदेनविहरतीत्यादिश्रुतेःपयसासेचकानांदेशाद्देशांतरगमनशीलानामघ्न्या
नांहंतुमयोग्यानांधेनूनांगवांपतिंवायुंप्रतिइषुध्यसीतिवा। वायुर्वावगवांपतिरितिश्रुतेःधेनुशब्दाच्च। ओदती

नांभक्त्यासेचकानां।योयुवतीनामतिशयेनात्मतत्त्वावगमकानामघ्न्यानांनित्यानांधेनूनांधर्मार्थकाममोक्षपो
षकाणांवाचांपतिंवायुंप्रतिपतिर्भवसीतिवा । वाचंधेनुमुपासीततस्याश्चत्वारःस्तनाःस्वाहाकारोवषट्कारोहंत
कारःस्वधाकारइति।तस्याद्वौस्तनौदेवाउपजीवंतिस्वाहाकारंचवषट्कारंचहंतकारंमनुष्याःस्वधाकारंपितरस्त
स्याःप्राणऋषभोमनोवत्सइत्यादिश्रुतिभ्यः॥२॥ताः।ताःपृश्नयःआपोगावोवाचोवा। अस्यसूददोहसःप्राणस्य
वायुस्थस्यपरमेश्वरस्यसोमंश्रीणंति । अद्भिर्हिसंसृष्टोभवतिसोमःपयआदिनावाशृतोभवति।मंत्रैर्वागृह्यते ।
अथसूददोहाःप्राणोवैसूददोहाइतिश्रुतिश्च । शोभनमुदंकर्मज्ञानंवादोग्धीतिसूददोहाः । उदेत्युच्चोभवत्यनेन
पुरुषइत्युदंज्ञानादि ।मनोवावसोमःतद्वाचःश्रीणंतिस्वार्थैः । प्रश्नयोग्यत्वात्पृश्नयोवाचः । प्रशंसनरूपत्वात्प्रशं
सनीयत्वाद्वा । प्रशंसनीयत्वमेवअपांगवांच । देवानांजन्मनियज्ञे । तत्रहितेषामभिव्यक्तिः पूर्वंज्ञानेवा । वि
शःप्रजाश्चश्रीणंति ।मुख्यस्ताएवश्रीणंतीतिचशब्दवर्जनं । दिवस्त्रिष्वारोचनेषु । आदित्यचंद्रविद्युत्पर्यंतं
स्थितानांदेवानांजन्मनियज्ञे । यज्ञोवैदेवजन्म। तत्रहिदेवाःप्रादुर्भवंति । आसूर्याचंद्रमसावाविद्युतंतेवैलोका
नधिश्रिताइत्यादिश्रुतेः । द्यौर्वाविविद्युत्तत्पतिंवायुमुपगम्यतेनैवपरमुपगच्छति ।सैषाब्रह्मलोकेविराजतइत्या

कर्म ॥५॥

दिश्रुतेर्द्यौरेवविद्युत् ॥ ३ ॥ अर्चंत । अर्चनंयज्ञादि । प्रार्चनंज्ञानध्यानादि । श्रेयान्द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञः परंतपेतिभगवद्वचनात् । प्रिययज्ञाअर्चंत । प्रियज्ञानाःप्रार्चंत । पुत्रकाःअल्पज्ञानाअप्यर्चंत । नबुद्धिभेदंज नयेदज्ञानांकर्मसंगिनां । जोषयेत्सर्वकर्माणिविद्वान्युक्तःसमाचरन्निति च । उतशब्दाज्ज्ञानिनामप्यर्चनंयुक्तं । स्वाश्रमानुसारेणेति । अधातेविष्णोविदुषाचिदर्ध्यस्तोमोयज्ञश्चराध्योहविष्मतेतिश्रुतेः । किंतदर्चनीयंधृष्णु धृष्टंपरंब्रह्मवासुदेवाख्यं । पुरंदेहंनार्चंत । प्रत्युद्गमप्रश्रयणाभिवादनंविधीयतेसाधुमिथःसुमध्यमे । प्राज्ञैःपर स्मैपुरुषायचेतसागुहाशयायैवनदेहमानिनइतिभागवते । सदेहमानिहरयेप्रणमेत्केवलायवा । नदेहायन तन्मानपरायचकथंचनेतिव्यासस्मृतौ । पुनरर्चंतेतितात्पर्यार्थे ॥ १ ॥ गर्गरगोधापिंगादीनांघोषाअपिनाद मात्रव्यंजकत्वेनभगवद्वाचकाएवेत्याह । अवस्वरातिगर्गरइत्यादिना । एतत्समस्तमिंद्रायैवेत्यर्थः । ब्रह्मवेदो विशेषतइंद्रायैवोद्यतः । गर्गरइतिपादभूषणमहामत्रकदधिपात्रहस्तिहस्तानांनाम । पिंगाचकोरी । अवपरी त्यल्पाधिक्यादिविशेषोपितद्वाचकएवेतिज्ञापनाय । चनिष्कददित्यनुकरणशब्दः । सनिष्वणदित्यतिशया ॥२५४॥ र्थे । तावाएताःसर्वाऋचःसर्वेवेदाःसर्वेघोषाएकैवव्याहृतिःप्राणएवप्राणऋचइत्येवविद्यादितिश्रुतिः । दध्नोमथ

निर्णय

नशब्दश्चाप्यंतर्नादस्वरूपतः। भीषकत्वंहरेर्ब्रूयादंतर्नादोहिभीषणे। गजबृंहितमप्येवंधिकारसहितंवदेत्।स्वरितेनसमायोगाद्धिकृतौस्वरितोयतः। महामत्रंजलाद्यैश्चयुक्तमेतादृशंवदेत्।पादभूषाचधिकारंतत्कृतंस्वरितंवदेत्। अद्भुतत्वंहरेर्वक्तिपिंगाकंठगशब्दवत्। तामेवाद्भुततांवक्तिगृहगोधापरापिचेतिशब्दतत्त्वे॥२॥ यच्चैन्योनद्यआपतंतितद्घोषश्चेंद्रवाचकः।नदीसमुद्रघोषाश्चनादत्वाच्छ्रैष्ठ्यवाचकाः। नादोहिश्रैष्ठ्यवाचीस्यादेवंघोषाःपरेपिचेति। तदर्थंचनद्यआपतंति। भूताधिभूतोंबुनिधानमध्येभूत्वाहरिःसर्वहरोतिधाम्ना। अगाधमंभोविदधातिभस्मयोबाडवाग्निर्नृहरिर्विचिंत्यइतिवैहायससंहितायां। सुदुघाःसुष्ठुअपांदोहनकर्त्र्यः।स्फुरणापगमनमासांनास्तीत्यनपस्फुरः। नित्यचलनस्वभावाः। अपगतस्फुरणत्वेनसोमंगृभायत। अचलत्वेनमनोवा॥३॥ व्यतीन्विशेषेणाधिकान्देवान्। अफाणयद्विस्तारयामास। दाशुषेयजमानाय। तत्समीपे। फणविस्तारइतिधातोः। सुयुक्तान्सुयोगरतान्।विशेषेणाधिकत्वेनव्यतयोदेवताःस्मृताः। नित्ययोगरताश्चैवनारायणपरायणाः। तएवचेंद्रियात्मानस्तान्विस्तारयतीश्वरः। मनआदींद्रियाणांतुशक्तिविस्तारएवतु।विस्तारोदेवतानांस्याद्भक्तेषुहरिणाकृतइतिप्रकाशसंहितायां।चतुर्भिःसाकंनवतिंचनामभिश्चक्रंनवृत्तंव्यतीँरवी

विपदितिश्रुतिः।समेंद्रोमेधयास्पृणोतु। अमृतस्यदेवधारणोभूयासं। शरीरंमेविचर्षणं। जिह्वामेमधुमत्तमा।
कर्णाभ्यांभूरिविश्रुवमितिच।नदेवायष्टिमादायरक्षंतिपशुपालवत्। यंतुरक्षितुमिच्छंतिबुध्यासंयोजयंतित
मितिभारते।तक्वोजगत्कर्ता। तकनिर्माणइतिधातोः।नवर्तवेप्रसवःसर्गतक्वइत्यादिप्रयोगाच्च। नेताचसर्व
स्य। तदेववपुःसः।यत्तज्जगत्कर्तृनेतृरूपं। देहदेहिविभागश्चनक्वचित्परमेश्वरे।गुणतद्वद्विभागोवानेहनाने
तिचश्रुतेरितिपाद्मे। तद्विज्ञानेनपरिपश्यंतिधीराआनंदरूपममृतंयद्विभाति।सद्देहःसुखगंधश्चज्ञानभाःस
त्पराक्रमः।ज्ञानज्ञानःसुखसुखःसविष्णुःपरमोक्षरइतिश्रुतेश्च।विशुद्धविज्ञानमरीचिमालयासचित्ररत्नप्रकरप्र
काशया।प्रकाशिताशेषजगत्स्वरूपयाप्रभुःसदाह्लादतनुर्विभूषितइतिपुरुषोत्तमसंहितायां।उपमाउपमायां।
उपमाविषयेअमुच्यतत्यक्तोभवत्।निरुपमइत्यर्थः।अल्पाक्षरेणशक्येपिवक्तुंबह्वक्षरंयदि।उक्तस्याधिक्यमेवात्र
निषेधेऽशेषतोभवेदितिशब्दनिर्णये ॥१॥ विश्वाविश्वान्द्विषोऽज्ञानपापादीनतीत्यशक्तोविष्णुःस्वभक्तानति
वहत्येवहि।यमेवैषवृणुतेतेनलभ्यस्तस्यैषआत्माविवृणुतेतनूंस्वां। तेषामहंसमुद्धर्तामृत्युसंसारसागरात्। भवा
मिनचिरात्पार्थमय्यावेशितचेतसामित्यादिप्रसिद्धिंउशब्देनाह।द्विषोतीत्यातिशयेनात्मानंप्रत्योहतइत्यतिश

31

ब्द्धयार्थः । ओदनंउंदतेःकर्मबंधनमभिनद्भगवान् । कानीनोबादरायणः । परः परमात्मा । गिरैवपच्यमानंपरि
पाककाले । संश्लेषादोदनंकर्मपच्यमानंगिरैवहि । अभिनद्भगवान्व्यासःस्वभक्तानामशेषतइतिव्याससंहितायां
॥२॥ अर्भकइवस्थितोनवंरथमध्यतिष्ठत् । कुमारः कुत्सितमारकः । अर्भकइवसूक्ष्मदेहः । पूर्वंपूर्वंदेहंपरित्यज्य
नवंनवंदेहमध्यतिष्ठज्जीवमादाय । जीवदेहंपरित्यज्यसहजीवेनचेश्वरः । जीवस्यान्यशरीरंचसमुत्पाद्यविश
त्यजइतिमान्यसंहितायां । कुमारकइवार्भकःसूक्ष्मदेहइतिवा । अर्भकःसूक्ष्मदेहोपिनकुमारइतिवा । सपक्ष
त्परिपक्वज्ञानादिगुणमकरोत् । महिषं महांतंब्रह्माणं मृगं मृगयंतंस्वात्मानं पित्रे स्वस्रे मात्रे लक्ष्म्यै विभुक्रतुं
पितृमातृविषयेपूर्णज्ञानं पुनःपूरयामासेत्यर्थः । ज्ञानपूर्णंविधातारंमोक्षदानेनकेशवः । स्वपुत्रंपूरयामासमहिषं
महतांमहानितिप्रवृत्ते ॥३॥ यथास्थिताःप्रज्ञाताः । इतस्ततःसंयोजनंविनायथास्थितशंसनंपथःप्राप्तिः । व्या
प्तोविशेषेणापन्नः । अविहृतमसंसृष्टं । कृच्छ्रादयथास्थितशंसननिमित्ताद्दुःखादवाग्गतिंगतश्रीकतामेवप्राप्नुयां
। विलोमःशत्रुजयकृत्संसर्गःपापनाशनः । यथास्थितःश्रीकरःस्यात्स्वाध्यायःशंसनेपिचेतिप्रवृत्ते । गतश्रियः
श्रियोहानिंपापहानिंपरस्यच । संसर्गश्छंदसांकुर्याच्छ्रियोवृद्धिंयथास्थितइतिस्वाध्यायतत्त्वे । किंचित्त्वेचोभ

३२

कर्म ॥ ७ ॥

यत्वेचसंशयेसदृशेतथा। इवशब्दःप्रयुज्येतन्यक्कारेपिचपंडितैरितिशब्दनिर्णये।अतोगतश्रीत्वसंशयेपीत्यर्थः। इतस्ततोविशेषेणसंहृतंसंयोजितंविहृतं। पापानांव्यतिषिक्तत्वाद्व्यतिषिक्तंविनाशकं। धनस्याव्यतिषंगेणव्यतिषंगोऽविनाशकः। सदृशंसदृशस्यैवयतःस्यात्प्रविनाशकं। तथाप्यप्राप्तनाशस्यधनस्यबलवत्त्वतः। शङ्कयान्नविनाशायपापस्येच्छासमेधितं।संसृष्टंस्याद्विनाशायनहीच्छाधनसंक्षयइतिस्वाध्यायतत्त्वे। अव्यतिषक्तत्वंचमोक्षेवर्ततइत्यत्रोभयार्थइवशब्दः।एवंभूतेनशंसनेनपाप्मानमपहंति।शमलंरागादिकंच। पापस्यपृथगुक्तेः। शमलंपापमुद्दिष्टंरागद्वेषादिकंतथा। अपराधश्चशमलंमलंचशमलंविदुरितिशब्दनिर्णये। यएवमुपास्तेसोपिपाप्मानमपहंति। ऋक्षुसंसृज्यमानासुप्रोच्यमानंजनार्दनं। पुंसंसृष्टस्यपापस्यनिहंतारंविशेषतः। तत्प्रसादेनमुक्तस्यपापासंसृष्टतामपि। ध्यायन्कर्माण्यकृत्वापिमुच्यतेसर्वपातकैरितिप्रवृत्ते॥ ७॥ नचैवमादिवाक्यानांस्वार्थेप्रामाण्याभावः। सिद्धार्थेप्रामाण्यस्यसाधितत्वात्। अविरोधाच्च।नचबह्वर्थेषुतात्पर्यकल्पनेकल्पनागौरवं। वचनेनैवप्रतीयमानत्वादर्थस्यकल्पनाभावात्।नचवाचनिकस्तात्पर्यार्थइतिविशेषः। तन्मानाभावात्। यत्रवाचनिकार्थादन्यस्तात्पर्यार्थःप्रतीयतेलौकिकवाक्येषुनतत्रसाक्षाद्वचनंबोधकं। वचनलिंगकानुमाहि

सा । विरोधादमुख्यवृत्तिर्वा । आप्तत्वनिश्चये । आप्तत्वानिश्चयेप्रामाण्यमेवनभवति । वेदवाक्यस्यतुवाचनि
कार्थंविनानैवान्योयुज्यते । वाचनिकानांतुबहूनामप्यविरोधेस्वीकार्यता ॥ ॐस्वाप्ययसंपत्त्योरन्यतरापेक्ष
माविष्कृतंहीतिसूत्रं । वानात्सूतेर्देवनाद्वासुदेवोवासाद्द्युतेश्छादनात्क्रीडयाच । बलादसुत्वाद्दातृतोवर्तनाच्च
तंवासुदेवंप्रवदंतिवेदाइत्यादिसौकरायणश्रुतिः । मोक्षेपिसुप्तिरस्तीत्याशंकानिवृत्त्यर्थमेवान्यतरपदं । रूढियो
गौविनाकश्चिन्नैवार्थोवेदगोभवेत् । तत्रापियौगिकोमुख्यःसर्वत्रास्तिसवैदिके । अनवस्थानिवृत्त्यर्थंयौगिकेरूढ
कल्पना । ज्ञातेविशेषविज्ञानंव्यवहारोपिरूढितइतिब्रह्मतर्के । वाचनिकमर्थंपरित्यज्यनियोगार्थकल्पनेश्रुतहा
निरश्रुतकल्पनेतिसर्वदोषाधिकौतस्यव्यर्थमापद्येते । एवंचवदतोविधिशब्दानिरर्थकाःसिद्धार्थावासिद्धशब्दा
वास्वार्थेप्रमाणभूताइत्युक्तेकिमुत्तरं । नचकारणंकिंचिद्वाचनिकानांबहूनामप्यर्थानांत्यागे । प्रतीयमानेतुविरो
धेतदन्योर्थःस्वीकार्योवाचनिकएव । सोपिवाचनिकएवेत्यपिततएवसिद्ध्यति । मुख्यार्थानांचसर्वेषांतारतम्यं
चविद्यते । तत्रापिपरमोमुख्योवाच्योशेषरवैर्हरिः । तत्तन्मुख्याविरोधेनतदन्यार्थस्यसंग्रहः । स्वतोमुख्यविरो
धेतुत्याज्योन्योर्थोखिलेष्वपि । इतिसर्वत्रनियमःशब्दार्थज्ञानभूमिष्वितिच । नचक्रियायामेवप्रयोजनंनसिद्धइ

तियुक्तं।ज्ञानमात्रेपिमहाप्रयोजनदर्शनात्पितृजीवनादिवाक्ये। आहचस्वयंभगवान्। द्वाविमौपुरुषौलोकेक्ष
रश्चाक्षरएवचाक्षरःसर्वाणिभूतानिकूटस्थोक्षरउच्यते।उत्तमःपुरुषस्त्वन्यःपरमात्मेत्युदाहृतः।योलोकत्रयमावि
श्यबिभर्त्यव्ययईश्वरः। यस्मात्क्षरमतीतोहमक्षरादपिचोत्तमः॥ अतोस्मिलोकेवेदेचप्रथितःपुरुषोत्तमः।योमा
मेवमसंमूढोजानातिपुरुषोत्तमं। ससर्वविद्भजतिमांसर्वभावेनभारत। इतिगुह्यतमंशास्त्रमिदमुक्तंमयानघ।ए
तद्बुद्ध्वाबुद्धिमान्स्यात्कृतकृत्यश्चभारतेति।श्रेयान्द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञःपरंतपेतिच। ध्यानंत्वखिलकर्मभ्यो
ध्यानाच्चज्ञानमुत्तमं। नज्ञानसदृशंकिंचित्पुरुषार्थप्रसिद्धयइतिप्रवृत्ते। दूरेणह्यवरंकर्मबुद्धियोगाद्धनंजयेतिच
।अशेषकर्मपूगोपिनविष्णुध्यानलेशभाक्। तच्चध्यानंहरेर्ज्ञानकोट्यंशायनपूर्यतइतिकर्मविवेके। तमेवंविद्वा
नमृतइहभवति नान्यःपंथाअयनायविद्यतइतिचश्रुतिः। नचकर्ममात्रेपर्यवसितिर्वेदस्य। सुखज्ञानस्यैवप्रयो
जनत्वात्। अतःसिद्धस्यैवप्रयोजनत्वंवाच्यं। प्रशंसादीनांचतात्पर्यवाचनिकार्थात्यागेनैवकथितंस्वयंभग
वता॥ ॐभाक्तंवानात्मवित्त्वात्तथाहिदर्शयतीति। तस्माद्विरुद्धवत्प्रतीयमानानिप्रशंसादीनिज्ञानसहकार्य
पेक्षयायोजनीयानि। पुराणादीनांतुश्रुत्यादिविरोधेगौणोप्यर्थोयुज्यते। कुहकंचेंद्रजालंचविरुद्धाचरणानि

35

च । दर्शयित्वाजनंसर्वंमोहयाशुमहेश्वरेत्यादिवाराहे ॥७॥ ब्रध्नस्यसूर्यस्यविष्टपंस्वर्गमुद्भन्वहींद्रोहंचयत्तदिं द्रगृहंब्रध्नंविष्टपंमध्वःपीत्वातत्रसचेवहिसुखमनुभवाव । सख्युरिंद्रस्यत्रिस्सप्तस्थानेषु । एकविंशतिदिव्यानि स्थानानिदिविचक्रिणः । वज्रिणोवापितद्भक्तेर्भुज्यंतेतानियाज्ञिकैरितिप्रवृत्ते । पूर्वान्सुतान्प्रातःसवनगा न्सोमानपाः । हरीनिंद्रियाणिवर्तयतीतिहरिवः । हरिभिर्वर्ततइतिवा । इदंमाध्यंदिनंसवनंकेवलंते । अ थोइत्यर्थांतरं । मधुमंतंसोमंजठरेआवृषस्वआसिंचममद्धिचसत्राअस्मत्राणेनसह । पीतशब्दवत् । अपूर्व पानत्वात्तदेवपानंमुख्यमितिपीतशब्दः । इंद्रस्यकेवलत्वात्केवलंमाध्यंदिनंसवनं । ममद्धीतितृतीयसवनं । तत्रहिमदोविशेषतोभवतिपूर्तेः । इतिसवनत्रयरूपताषोळशिनः । वृषण्वतवृष्णःइंद्रस्यविशेषतःप्रियत्वात् । एवंचतूरूपताषोळशिनः । राध्नोतिऋद्धोभवति । विहृतपक्षेतु । पादान्व्यवधायार्धर्चशःशंसेत् । पूर्वासांपूर्वा णिपदानि । गायत्र्यःपंक्तिभिःपंक्तीनांतुद्वेद्वेपदेशिष्येतेताभ्यांप्रणुयात् । उष्णिहोबृहतीभिरुष्णिहांतूत्तमा न्पादान्द्वौद्वौकुर्यात्।चतुरक्षरमाद्यं । द्विपदाश्चतुर्धाकृत्वाप्रथमांत्रिष्टुभोत्तराजगतीभिःउत्तमायाश्चतुर्थमक्षर मंत्यंपूर्वस्याद्यमुत्तरस्यानुष्टुभमतिछंदस्स्ववदध्यात्।द्वितीयतृतीययोःपादयोरवसानेउपदध्यात् । प्रचेतनेति

36



पूर्वस्यां । प्रचेतयेत्युत्तरस्यां। उत्तरास्वितरान्पादान्षष्ठान्कृत्वाअनुष्टुप्प्रकारंशंसेत्।महानाम्नीनांपंचाक्षरानुपस
र्गानुपसृजत्येकादशाक्षरेषुपादेषु । एवाह्येवाअपाःपूर्वेषांहरिवःसुतानांएवाहींद्रंअथोइदंसवनंकेवलंते एवा
हिशक्रोममद्धिसोमंमधुमंतमिंद्रवशीहिशक्रःसत्रावृषंजठरआवृषस्वेति।भगवद्भक्तिज्ञानवैराग्यपूर्वकंचकर्मक
र्तव्यं। इष्टापूर्तंमन्यमानावरिष्ठंनान्यच्छ्रेयोवेदयंतेप्रमूढाः।नाकस्यपृष्ठेसुकृतेतेनुभूत्वाइमंलोकंहीनतरंवाविशं
ति । नैष्कर्म्यमप्यच्युतभाववर्जितंनशोभतेज्ञानमलंनिरंजनं। कुतःपुनःशश्वदभद्रमीश्वरेनचार्पितंकर्मयदप्य
कारणं । यतःप्रवृत्तिर्भूतानांयेनसर्वमिदंततं । स्वकर्मणातमभ्यर्च्यसिद्धिंविंदतिमानवः । त्रैविद्यामांसोमपाः
पूतपापायज्ञैरिष्ट्वास्वर्गतिंप्रार्थयंते । तेपुण्यमासाद्यसुरेंद्रलोकमश्नंतिदिव्यान्दिविदेवभोगान् । मयिसर्वाणिक
र्माणिसंन्यस्याध्यात्मचेतसा । निराशीर्निर्ममोभूत्वायुध्यस्वविगतज्वरः। येममतमिदंनित्यमनुतिष्ठंतिमान
वाः । श्रद्धावंतोनसूयंतोमुच्यंतेतेपिकर्मभिः । येत्वेतदभ्यसूयंतोनानुतिष्ठंतिमेमतं । सर्वज्ञानविमूढांस्तान्वि
द्धिनष्टानचेतसः । तपस्विनोदानपरायशस्विनोमनस्विनोमंत्रविदःसुमंगलाः । क्षेमंनविंदंतिविनायदर्पणंत
स्मैसुभद्रश्रवसेनमोनमः । एषउएवदाश्वान्यएवंवेद । यदेवविद्ययाकरोतिश्रद्धयोपनिषदातदेववीर्यवत्तरंभ

वति। परंभावमजानंतोममभूतमहेश्वरं। मोघाशामोघकर्माणोमोघज्ञानाविचेतसः। सर्वगुह्यतमंभूयःशृणुमे
परमंवचः। इष्टोसिमेदृढमितिततोवक्ष्यामितेहितं। मन्मनाभवमद्भक्तोमद्याजीमांनमस्कुरु। मामेवैष्यसिस
त्यंतेप्रतिजानेप्रियोसिमे। विज्ञानमानंदंब्रह्मरातिर्दातुःपरायणं। तिष्ठमानस्यतद्विदइत्यादिश्रुतिस्मृतिभ्यः।
नमोनारायणायाजभवशक्रोष्णरुङ्मुखैः। सदावंदितपादायश्रीपायप्रेयसेधिकं॥ ॥इतिश्रीमदानंदतीर्थभ
गवत्पादाचार्यविरचितःकर्मनिर्णयःसंपूर्णः॥ ॥ छ ॥ ॥ छ ॥ ॥



श्रीमद्धनुमद्भीममध्वांतर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवायनमः॥ ॥ ॐ॥ सदागमैकविज्ञेयंसमतीतक्षराक्षरं। नारायणंसदावंदेनिर्दोषाशेषसद्गुणं॥ विशेषणानियानीहकथितानिसदुक्तिभिः। साधयिष्यामितान्येवक्रमात्सज्जनसंविदे॥ऋगाद्याभारतंचैवपंचरात्रमथाखिलं। मूलरामायणंचैवपुराणंचैतदात्मकं। येचानुयायिनस्तेषांसर्वेतेचसदागमाः। दुरागमास्तदन्येयेतैर्नज्ञेयोजनार्दनः। ज्ञेयएतैस्सदायुक्तैर्भक्तिमद्भिःसुनिष्ठितैः। नचकेवलतर्केणनाक्षजेननकेनचित्। केवलागमविज्ञेयोभक्तैरेवनचान्यथेतिब्रह्मांडे। नावेदविन्मनुतेदंबृहंतंसर्वानुभुमात्मानंसांपरायइतितैत्तिरीयश्रुतिः। नैषातर्केणमतिरापनेथाप्रोक्तान्येनैवसुज्ञानायप्रेष्ठेतिकठश्रुतिः। नेंद्रियाणिनानुमानंवेदाह्येवैनंदयंतितस्मादाहुर्वेदाइतिपिप्पलादश्रुतिः। नचैतेषांवचनानामेवाप्रामाण्यं। अपौरुषेयत्वाद्वेदस्य। इतिहासपुराणःपंचमोवेदानांवेदइतितद्गृहीतत्वाच्च। नचापौरुषेयंवाक्यमेवनास्तीतिवाच्यं। तदभावेसर्वसमयाभिमतधर्माद्यसिद्धेः। यस्यतौनाभिमतौनासौसमयी। समयप्रयोजनाभावात्। नचतेनलोकोपकारः। धर्माद्यभावज्ञानेपरस्परंहिंसादिनाऽपकारस्यैवप्राप्तेः। नचोपकारेणतस्यप्रयोजनं। अदृष्टाभावात्।अतोधर्माद्यभावंवदतास्वसमयस्यानर्थक्यमंगीकृतमेवेतिनासौसमयी। नचपौरुषे

येणवाक्येनतत्सिद्धिः ।अज्ञानविप्रलंभयोःप्राप्तेः । नचतदर्थत्वेनसर्वज्ञःकल्प्येत । अन्यत्रादृष्टस्यसर्वज्ञत्वस्य
कल्पनंतस्याविप्रलंभकत्वकल्पनंतस्यतत्कृतत्वकल्पनंचेतिकल्पनागौरवप्राप्तेः।अपौरुषेयवाक्यांगीकारेनकिं
चित्कल्प्यं। अपौरुषेयत्वंचस्वतएवसिद्धं। वेदकर्तुरप्रसिद्धेः ।अप्रसिद्धौचकर्तुस्तत्कल्पनेकल्पनागौरवं । अ
कल्पनेचाकर्तृकत्वंसिद्धमेव। नचलौकिकवाक्यवत्सकर्तृकत्वं । तस्याकर्तृकत्वप्रसिद्ध्यभावात् । नचकेनचि
त्कृत्वावेदइत्युक्तंवेदसमं। परंपराभावात्। नचस्वयंप्रतिभातवेदैर्दृष्टमवेदवाक्यंभवति।परंपरासिद्धवेदवाक्या
नुसारित्वात्। वेदद्रष्टॄणामुक्तगुणवत्त्वाच्चतेषां।उक्तंचब्रह्मांडे। विंशल्लक्षणतोनूनस्तपस्वीबहुवेदवित्। वेदइत्ये
वयंपश्येत्सवेदोज्ञानदर्शनादिति। प्रामाण्यंचस्वतएव । अन्यथानवस्थानात्। नचोक्तयुक्त्यधीनत्वंप्रामाण्य
स्य ।बुद्धिदोषनिरासमात्रकारणत्वाद्युक्तीनां । अदुष्टबुद्धीनांस्वतएवसिद्धत्वाच्चप्रामाण्यस्य।नचाकांक्षाया
मेवप्रमाणांतरापेक्षत्वादनवस्थाभावइतिवाच्यं। आकांक्षायाएवबुद्धिदोषात्मकत्वात्। दुष्टबुद्धीनामेवाप्रामा
ण्यशंकेतिपरतोप्रामाण्यं। प्रामाण्यंचस्वतएवसिद्धं । नचोच्चारणकालएववर्णानामुत्पत्तिरितिवाच्यं। तदेवे
दंवचनमितिप्रत्यभिज्ञाविरोधात् ।नचसादृश्यात्प्रत्यभिज्ञाभ्रांतिरितिवाच्यं। सोयंदेवदत्तइत्यादेरपितथात्व

